vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- त्रिशङ्कोः कथा – विश्वामित्रेण कृतः यज्ञः, अनागतानां वासिष्ठानां कृते शापः, असम्प्राप्ताः देवाः, तपोबलेन स्वर्गं प्रेषितः त्रिशङ्कुः इन्द्रेण अधः पातितः, क्रुद्धेन विश्वामित्रेण नूतनलोकनिर्माणम्, देवानां प्रार्थनया तत्त्यागः
- दक्षिणदिशं त्यक्त्वा पश्चिमदिशि पुष्करक्षेत्रे विश्वामित्रस्य तपः

# अम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थं बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीयमानः

- अम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थं = अयोध्याधिपतेः अम्बरीषस्य यज्ञपशौ इन्द्रेण हृते सति, तत्प्रायश्चित्ताय
- बह्वीभिः गोभिः = गवां शतसहस्रेण
- क्रीत्वा = परिक्रीय
- नरपशुताम् = मानुषपशुत्वम्
- नीयमानः = प्राप्यमाणः

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# तावदृचीकस्य मध्यमपुत्रः शुनःशोपः शरणमयाचत ।

- तावत् = तदानीम्
- ऋचीकस्य = ऋचीकनाम्नः ऋषेः
- मध्यमपुत्रः = त्रिषु पुत्रेषु द्वितीयः
- शुनःशोपः = शुनःशोपनामा बालकः
- शरणम् = रक्षणम्
- अयाचत = प्रार्थयामास

अम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थं वह्निभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्तावदृचीकस्य मध्यपुत्रः शुनःशेपः शरणमयाचत।

- गवां शतसहस्रेण विक्रीणीषे सुतं यदि । पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव ॥
- एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः। नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथञ्चन ॥
- ऋचीकस्य वचश्श्रुत्वा तेषां माता महात्मनाम्। उवाच नरशार्दूलमम्बरीषं तपस्विनी ॥
- ममापि दयितं विद्धि कनिष्ठं शुनकं नृप। तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥
- उक्तवाक्ये मुनौ तस्मिन् मुनिपत्न्यां तथैव च। शुनश्शेपस्स्वयं राम मध्यमो वाक्यमब्रवीत् ॥
- पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम्। विक्रीतं मध्यमं मन्ये राजन् पुत्रं नयस्व माम् ॥

Vyoma
॥वाचं धेनुमुपासीत॥
Samskritam-Value Education

अम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थं वह्निभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्तावदृचीकस्य मध्यपुत्रः शुनःशेपः शरणमयाचत।

- शुनश्शेपं नरश्रेष्ठ गृहीत्वा तु महायशाः। व्यश्राम्यत् पुष्करे राजा मध्याह्ने रघुनन्दन ॥
- तस्य विश्रममाणस्य शुनश्शेपो महायशाः। पुष्करक्षेत्रमागम्य विश्वामित्रं ददर्श ह ॥
- तप्यन्तमृषिभिस्सार्धं मातुलं परमातुरः । विवर्णवदनो दीनस्तृष्णया च श्रमेण च ॥
- पपाताङ्के मुनेराशु वाक्यं चेदमुवाच ह । त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुङ्गव ॥
- राजा च कृतकार्यस्स्यादहं दीर्घायुरव्ययः । स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम्

Vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं

- तात्पर्य्यम् – विश्वामित्रः त्रिशङ्कोः कृते नूतनानां लोकानां, सप्तर्षिमण्डलस्य, देवानां च सृष्टिम् आरब्धवान् । ततः अमराणां प्रार्थनया एतत्कार्यं त्यक्त्वा दक्षिणदिशि सञ्जातेन तपोविघ्नेन खिन्नः पश्चिमदिशि पुष्करक्षेत्रे तपः कर्तुम् आरब्धवान् । तावति अयोध्याधिपतेः अम्बरीषस्य यज्ञपशौ इन्द्रेण अपहृते सति सः प्रायश्चित्तरूपेण नरबलिं दातुम् ऋचीकमहर्षेः मध्यमपुत्रं शुनःशेपं गवां शतसहस्रेण क्रीत्वा नीतवान् । सः शुनःशेपः रक्षणार्थं विश्वामित्रं प्रार्थयामास ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं

- गीर्वाणगणप्रार्थनया – गीर्वाणां गणः, गीर्वाणगणस्य प्रार्थना, तया ।
- परित्यक्त... – अन्यत् भुवनम्, भुवनान्तरस्य निर्माणम्, भुवनान्तरनिर्माणस्य कर्म, परित्यक्तं भुवनान्तरनिर्माणकर्म येन सः
- तपःप्रत्यूहः – तपसः प्रत्यूहः । “विघ्नोऽन्तरायः प्रत्यूहः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखेभ्यस्तेभ्यो हविष्यन्दादिभ्यः शापेन वसिष्ठपुत्रदशां दत्त्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्याममम्बरीषं शुनःशेपं च परिपूर्णमनोरथौ कारयामास।

- अयम्, भगवान्, निज-तनय-विनिमयेन, रक्षितुम्, एनम्, उन्मुखः, पराङ्मुखेभ्यः, तेभ्यः, हविष्यन्द-आदिभ्यः, शापेन, वसिष्ठ-पुत्र-दशाम्, दत्त्वा, गाथा-द्वय-प्रीताभ्याम्, इन्द्र-उपेन्द्राभ्याम्, अम्बरीषम्, शुनःशेपम्, च, परिपूर्ण-मनोरथौ, कारयामास।

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः

- अयम् भगवान् = एषः पूज्यः विश्वामित्रः
- निजतनयविनिमयेन = स्वपुत्रेषु कस्यचित् परिदानेन
- एनम् = शुनःशेपम्
- रक्षितुम् = पालयितुम्
- उन्मुखः = उत्सुकः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# पराङ्मुखेभ्यस्तेभ्यो हविष्यन्दादिभ्यः शापेन वसिष्ठपुत्रदशां दत्त्वा

- पराङ्मुखेभ्यः = अनिच्छद्भ्यः
- हविष्यन्दादिभ्यः तेभ्यः = हविष्यन्द-प्रभृतिभ्यः स्वपुत्रेभ्यः
- शापेन = आक्रोशेन
- वसिष्ठपुत्रदशाम् = श्वभक्षकतां
- दत्त्वा = विधाय

# गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्याममम्बरीषं शुनःशेपं च परिपूर्णमनोरथौ कारयामास।

- गाथाद्वयप्रीताभ्याम् = गाथाद्वयं विरचय्य, ताभ्यां सन्तुष्टाभ्याम्
- इन्द्रोपेन्द्राभ्याम् = पुरन्दर-नारायणाभ्याम्
- अम्बरीषम् = यज्ञं पूरयितुम् इच्छन्तं राजानम्
- शुनःशेपम् च = रक्षणं प्रार्थितवन्तं ऋचीकपुत्रं च
- परिपूर्णमनोरथौ = सिद्धमनोरथौ
- कारयामास = कारितवान्

# अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः

- तात्पर्य्यम् – विश्वामित्रः स्वपुत्रेषु कस्यचित् प्रतिदानेन शुनःशेपं रक्षितुम् इष्टवान् । किन्तु तत्पुत्राः तस्माद्विमुखाः । तेन कुपितः सन् वासिष्ठान् इव स्वपुत्रानपि श्वमांसभक्षकत्वेन शप्त्वा विश्वामित्रः शुनःशेपं इन्द्र-उपेन्द्र-स्तुतिपूर्वकं गाथाद्वयं पाठितवान् । ताभ्यां प्रीतयोः इन्द्रोपेन्द्रयोः अनुग्रहेण शुनःशेपः सजीवं रक्षितः, अम्बरीषोऽपि यज्ञफलं प्राप ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखेभ्यस्तेभ्यो हविष्यन्दादिभ्यः शापेन वसिष्ठपुत्रदशां दत्त्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्या-मम्बरीषं शुनःशेपं च परिपूर्णमनोरथौ कारयामास।

- निजतनयविनिमयेन – निजः तनयः, निजतनयस्य विनिमयः, तेन
- इन्द्रोपेन्द्राभ्याम् – इन्द्रश्च उपेन्द्रश्च ताभ्याम् । "इन्द्रो मरुत्वान् मघवा", "उपेन्द्र इन्द्रावरजः चक्रपाणिश्चतुर्भुजः" (अमरः)
- परिपूर्णमनोरथौ – परिपूर्णः मनोरथः ययोः तौ
- कारयामास – "डुकृञ् करणे" + णिच् + लिट् प्रथम.१

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# ततस्तपस्यन्तमेनं मेनकासङ्गतस्तपोभङ्गश्चिरमङ्गीचकार।

- ततः, तपस्यन्तम्, एनम्, मेनका-सङ्गतः, तपः-भङ्गः, चिरम्, अङ्गीचकार
- ततः = शुनःशेपप्रसङ्गानन्तरम्
- तपस्यन्तम् = तपः चरन्तम्
- एनम् = विश्वामित्रम्
- मेनकासङ्गतः = मेनकानाम्न्याः अप्सरसः सङ्गात्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# ततस्तपस्यन्तमेनं मेनकासङ्गतस्तपोभङ्गश्चिरमङ्गीचकार।

- तपोभङ्गः = तपसः विच्छेदः
- चिरम् = बहुकालम्
- अङ्गीचकार = अनुससार
- तात्पर्य्यम् – तपोभङ्गार्थम् इन्द्रेण प्रेषितया अप्सरसा मेनकया आकृष्टः विश्वामित्रः तपोनियमादिकं त्यक्त्वा तस्या सहवासे चिरकालं यापयामास ।

# ततस्तपस्यन्तमेनं मेनकासङ्गतस्तपोभङ्गश्चिरमङ्गीचकार।

- तपस्यन्तम् – तपस् + क्यङ् (नामधातुः) + शतृ – तकारान्तः, पुं, २.१
- मेनकासङ्गतः – मेनकायाः सङ्गः, तस्मात् । पञ्चम्यास्तसिः । अव्ययम् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पश्चात्पश्चात्तापाभिभूतोऽयमुत्तरे भूभृति कौशिकीतीरे घोरं तपश्चचार।

- पश्चात्, पश्चात्ताप-अभिभूतः, अयम्, उत्तरे, भूभृति, कौशिकी-तीरे, घोरम्, तपः-चचार
- पश्चात् = मेनकाप्रसङ्गोत्तरम्
- पश्चात्तापाभिभूतः = अनुतापेन खिन्नः,
- अयम् = विश्वामित्रः
- उत्तरे भूभृति = हिमालयपर्वते

# पश्चात्पश्चात्तापाभिभूतोऽयमुत्तरे भूभृति कौशिकीतीरे घोरं तपश्चचार।

- कौशिकीतीरे = कौशिकीनद्याः तटे
- घोरम् = अत्युग्रम्
- तपश्चचार = तपः कृतवान्
- तात्पर्य्यम् – मेनकाप्रसङ्गानन्तरं तपोनाशकारणात् अनुतापेन खिन्नः विश्वामित्रः उत्तरदिशि हिमालयपर्वते कौशिकीतटे अयुग्रं तपः कृतवान्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

तत्र जम्भारिप्रहितां रम्भां शैली भवेति शप्त्वा पूर्वस्यां दिशि निरस्तनिःश्वासं तपश्चरत्यमुष्मिन्नूष्मणा तपोऽग्नेरुद्विग्नितामरसख-स्तामरसासनः सन्निधाय जितेन्द्रियत्वाद्ब्रह्मर्षिरसि वसिष्ठोऽप्येवं व्याहरतु भवन्तमित्यभाषत।

- तत्र, जम्भ-अरि-प्रहिताम्, रम्भाम्, शैली, भव, इति, शप्त्वा, पूर्वस्याम्, दिशि, निरस्त-निःश्वासम्, तपः-चरति, अमुष्मिन्, ऊष्मणा, तपस्-अग्नेः, उद्विग्नित-अमर-सखः, तामरस-आसनः, सन्निधाय, जित-इन्द्रियत्वात्, ब्रह्म-ऋषिः, असि, वसिष्ठः, अपि, एवम्, व्याहरतु, भवन्तम्, इति, अभाषत

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# तत्र जम्भारिप्रहितां रम्भां शैली भवेति शप्त्वा

- तत्र = हिमालये
- जम्भारिप्रहिताम् = इन्द्रेण प्रेषिताम्
- रम्भाम् = रम्भानाम्नीम् अप्सरसम्
- शैली = शिलारूपा
- भव = जायस्व
- इति शप्त्वा = एवंरूपेण शापं दत्त्वा

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पूर्वस्यां दिशि निरस्तनिःश्वासं तपश्चरत्यमुष्मिन्

- पुर्वस्यां दिशि = प्राच्याम्
- निरस्तनिःश्वासम् = प्राणसञ्चारं निरुध्य
- अमुष्मिन् = विश्वामित्रे
- तपश्चरति [सति] = तपः कुर्वति

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# ऊष्मणा तपोऽग्नेरुद्विग्निताामरसखस्तामरसासनः सन्निधाय

- तपोऽग्नेः = तस्य तपोरूपस्य ज्वलनस्य
- ऊष्मणा = तापेन
- उद्विग्निताामरसखः = विह्वलितैः देवैः सहितः
- तामरसासनः = कमलासनः ब्रह्मा
- सन्निधाय = प्रत्यक्षः सन्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# जितेन्द्रियत्वाद्ब्रह्मर्षिरसि वसिष्ठोऽप्येवं

- जितेन्द्रियत्वात् = विषयप्रवृत्तिप्रतिरोधेन शिक्षित-इन्द्रियग्रामत्वात्
- ब्रह्मर्षिः असि = ब्रह्मर्षिः जातः त्वम्
- वसिष्ठः अपि = त्वत्प्रतिपक्षी वसिष्ठमहर्षिः अपि
- एवं = ब्रह्मर्षित्वेन

# व्याहरतु भवन्तमित्यभाषत ।

- व्याहरतु = वदतु, अङ्गीकरोतु
- भवन्तम् = विश्वामित्रम्
- इति = एवंप्रकारेण
- अभाषत = उवाच

# तत्र जम्भारिप्रहिताम् ...

- तात्पर्य्यम् – उत्तरदिशि यदा विश्वामित्रः तपश्चरति स्म, तदा तस्य तपोभङ्गार्थम् इन्द्रः रम्भां प्रेषितवान् । क्रोधेन तां शप्त्वा विश्वामित्रः पूर्वां दिशं गत्वा तत्र प्राणसञ्चारं निरुध्य अत्युग्रं तपः चचार । तस्य तपोरूपस्य ज्वलनस्य तापेन व्यथिताः देवाः ब्रह्मणा सह तत्समक्षम् आगत्य तं ब्रह्मर्षिरिति अङ्गीकृतवन्तः । वसिष्ठः अपि एतत् अनुमोदितवान् ।

# तत्र जम्भारिप्रहिताम् ...

- तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत । त्रैलोक्यं येन सम्भ्रान्तम् आतापितमिवाभवत् ॥
- बहुभिः कारणैर्देव विश्वामित्रो महामुनिः | लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ॥
- ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः । ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥
- ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च । ओंकारोऽथ वषट्कारो वेदाश्च वरयन्तु माम् ॥
- क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि । ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥
- ततः प्रसादितो देवैः वसिष्ठो जपतां वरः । सख्यं चकार ब्रह्मर्षिः एवमस्त्विति चाब्रवीत् ॥

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# तत्र जम्भारिप्रहिताम् ...

- जम्भारिप्रहिताम् – जम्भस्य अरिः, जम्भारिणा प्रहिता । "जम्भभेदी हरिहयः" (अमरः)
- निरस्तनिःश्वासम् – निरःस्तः निःश्वासः यथा तथा
- उद्विग्नितामरसखः – उद्विग्निताः अमराः, उद्विग्नितामराणां सखा । "राजाहःसखिभ्यष्टच्" इति समासान्तेन सखिशब्दः अकारान्तः सम्पद्यते

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

# तत्र जम्भारिप्रहितताम् ...

- तामरसासनः – तामरसम् आसनं यस्य सः । “पङ्केरुहं तामरसं सारसं सरसीरुहम्” (अमरः)
- ब्रह्मर्षिः – ब्रह्म = ब्रह्मतुल्यः ऋषिः / ब्रह्म = वेदः, परं ब्रह्म; तत् ऋषति = वेत्ति ।
- व्याहरतु – वि+आ+ “हृञ् हरणे” – लोट्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- शुनःशेपवृत्तान्तम्
- मेनकया सहवासः
- रम्भायाः शापः
- पूर्वस्यां दिशि अत्युग्रं तपः – ब्रह्मर्षिपदप्राप्तिः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in